ॐ गन्धद्वारा.........( पृ० २१ में ) ॥

ॐ या औषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्परा ।
मनैनुबभ्रूणामह ँ सतन्धामानि सप्त च ॥

ॐ काण्डात्.........( पृ० १५ में ) ॥

ॐ अश्वत्थे वोनिषदनम्पर्णो वोवसतिष्कृता । गोमाज इकिलासथयत्सनव थपूरुषम् ॥

ॐ स्योना पृथिवी नोभवानृक्षरानिवेशनी । यच्छानः शर्मसप्रथाः ।

ॐ याः फलानि.........( पृ० २५ में )

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥

फिर कलश को रक्त वस्त्र से वेष्टित करते हुये यह मन्त्र बोले—

ॐ वसो पवित्रमसि शतधारं वसो पवित्रमसि सहस्रधारं देवस्त्वासविता पुनातु । वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥

कलश के उपर पूर्णपात्र ( या नारियल ) रखे—

ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्ज ँ शतक्रतो ॥

निम्न मन्त्र से वरुण का आवाहन करके गन्धाक्षत से पूजा करें।

ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ( ँ ) स मान आयुः प्रमोषीः॥

फिर कलश पूजन में दिये 'कलशस्य मुखे.......' आदि मन्त्रों से वरुण की प्रार्थना करें। सम्भव हो तो स्वर्णमय देवी विग्रह या यन्त्र की प्राणप्रतिष्ठा पूर्वक कलश के ऊपर स्थापित करें। फिर उसका या केवल उसी कलश का श्री सूक्त मन्त्रों से (या निर्वाण मन्त्र से या 'जयन्ति मंगला काली'...... मन्त्र से), पूजा करें। कलश में देवी को आवाहित करने के मन्त्र इस प्रकार हैं :—

ॐ आगच्छ वरदे देवि दैत्यदर्प निषूदनि।
पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये॥
सर्व तीर्थमयं वारि सर्व देव समन्वितम्।
इमं घटं समागच्छ तिष्ठदेवगणैः सह॥

दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय।
बलिं पूजां गृहाणत्वमष्टाभिः शक्तिभिः सह॥

अनुष्ठान के अन्तिम दिन पूजानन्तर निम्नांकित मन्त्रों से देवी का विसर्जन होने के बाद किसी जलाशय में घट को प्रवाहित करना चाहिये।

उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च।
कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह॥

दुर्गे देवि जगन्मात स्वस्थानं गच्छ पूजिते ।
सम्वत्सरे व्यतीते तु पुनरा गमनाय वै ॥
इमां पूजां मया देवि यथाशक्त्योपपादिताम् ।
रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम् ॥

गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ।
व्रज स्रोतो जलं वृद्धयै स्थीयतां च जलेत्विह ॥

ॐ नमो गणेभ्यो गणपतिभ्यश्चवो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥

## * षडङ्गन्यासाः *

मनो जूतिरिति मन्त्रस्य बृहस्पतिऋषिः बृहस्पतिर्देवता बृहतीच्छन्दः हृदयन्यासे जपे विनियोगः ॥

ॐ मनो ज्जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञᳬ समिमन्दधातु ॥ विश्वे देवास इह मादयन्तामो३ म्प्रतिष्ठ ॥
ॐ हृदयाय नमः ॥१॥

अबोद्ध्यग्निरिति मन्त्रस्य बुधगविष्ठिरा ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः शिरोन्यासे जपे विनियोगः ॥

ॐ अबो'द्ध्य_ग्निः समिधा जना'नाम्प्रति'धे नु-मिवायतीमुषासम् ॥ यह्वाऽइवप्प्रवयामुज्जिहा'नाः प्रभानवः सिस्रते नाकमच्छ ॥ ॐ शिरसे स्वाहा ॥२॥

मूर्द्धानमिति मन्त्रस्य भरद्वाज ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः शिखान्यासे जपे विनियोगः ॥

ॐ मूर्द्धानन्दिवोऽ अरतिम्पृथिव्या व्वै'श्वानर-मृतऽ आजातमग्निनम् ॥ कविंᳬ सम्राजमतिथि-ञ्जना'नामासन्ना पात्रञ्जनयन्त देवाः ॥ ॐ शिखायै वषट् ॥३॥

मर्म्माणि त इति मन्त्रस्य अप्रतिरथ ऋषिः मर्म्माणि देवता विराट्छन्दः कवचन्यासे जपे विनियोगः ॥

मर्म्माणि ते व्वर्म्म'णाच्छादयामि सोमस्त्वा राजाऽमृतेनानुवस्ताम् ॥ उरोर्व्वरीयो व्वरुणस्ते

कृणोतु जयन्तन्त्वानुदेवा मदन्तु ॥ ॐ कवचाय हुम् ॥४॥

विश्वतश्चक्षुरिति मन्त्रस्य विश्वकर्मा भौवन ऋषिः विश्वकर्मा देवता त्रिष्टुप्छन्दः नेत्रन्यासे जपे विनियोगः ॥

ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो-बाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ॐ नेत्र-त्रयाय वौषट् ॥५॥

मा नस्तोके इति मन्त्रस्य परमेष्ठी ऋषिः एकरुद्रो देवता जगतीछन्दः अस्त्रन्यासे जपे विनियोगः ॥

ॐ मा नस्तोके तनये मा न ऽआयुषि मा नो गोषु मा नो ऽअश्वेषु रीरिषः मा नो व्वीरान्न् रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ॐ अस्त्राय फट् ।६॥

इस प्रकार न्यास करने के उपरान्त शिव पर धाराभिषेक करते हुए पाठ आरम्भ करे:—

ॐ ॥ नमस्ते रुद्द्र मन्न्यवऽउतो तऽइषवे नमः ॥ बाहुब्भ्यामुत ते नमः ॥१॥ या ते रुद्द्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्न्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरु मा हिंꣳसीः पुरुषञ्जगत् ॥३॥ शिवेन व्वचसा त्त्वा गिरिशाच्छा व्वदामसि ॥ यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् ॥४॥ अध्यवोचदधिवक्ता प्रथमो दैव्व्यो भिषक् ॥ अहीꣳश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्न्योधराचीः परासुव ॥५॥ असौ यस्ताम्म्रो ऽअरुणऽउत बब्भ्रुः सुमङ्गलः ॥ ये चैनꣳ रुद्द्रा ऽअभितो दिक्षुश्रिताः सहस्स्रशोऽवैषाꣳ हेडऽईमहे ॥६॥ असौ यो ऽवसर्पति नीलग्ग्रीवो व्विलोहितः ॥ उतैनङ्गोपा ऽअदृश्रन्नदृश्रन्नुदहार्य्यः

स दृष्टो मृडयाति नः ॥७॥ नमोऽस्तु नीलग्ग्री-
वाय सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य
सत्त्वानो ऽहन्तेभ्यो ऽकरन्नमः ॥८॥ प्रमुञ्च धन्न्व-
नस्त्वमुभयोरार्त्न्योर्ज्ज्याम् । याश्च ते हस्त
ऽइषवः परा ता भगवो व्वप ॥९॥ विज्ज्यन्धनुः
कपर्द्दिनो व्विशल्ल्यो बाणवाँ२ ऽउत ॥ अने-
शन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ॥१०॥
या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ॥
तयास्म्मान्विश्श्वतस्त्वमयक्ष्मया परिभुज ॥११॥
परि ते धन्न्वनो हेतिरस्म्मान्न्वृणक्तु व्वि-
श्श्वतः ॥ अथो य ऽइषुधिस्तवारे ऽअस्म्मन्नि-
धेहि तम् ॥१२॥ अवतत्त्य धनुष्ट्वꣳ सहस्राक्ष
शतेषुधे ॥ निशीर्य्य शल्ल्यानाम्मुखा शिवो
नः सुमना भव ॥१३॥ नमस्त ऽआयुधायानात-
ताय धृष्ष्णवे ॥ उभाभ्यामुत ते नमो बाहु-
भ्यान्तव धन्न्वने ॥१४॥

मा नो॑ म॒हान्त॑मु॒त मा नो॑ ऽअर्भ॒कम्मा न॒ ऽउक्ष॑न्त-मु॒त मा न॑ ऽउक्षि॒तम् ॥ मा नो॑ ऽवधीः पि॒तर॒-म्मोत म॒ातर॒म्मा न॑ः प्रि॒यास्त॒न्वो रुद्र रीरिषः ॥१५॥ मा न॑स्तो॒के तन॑ये॒ मा न॒ ऽआयु॑षि॒ मा नो॒ गो॒षु मा नो॒ ऽअश्वे॑षु रीरिषः ॥ मा नो॑ वी॒रा-न्रु॑द्र भा॒मिनो॑ ऽवधीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे ॥१६॥ नमो॒ हिर॑ण्यबाहवे । सेना॒न्ये॒ दि॒शाञ्च॒ पत॑ये॒ नमो॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः पशू॒नाम्पत॑ये॒ नमो॒ नमः॑ श॒ष्पिञ्ज॑राय॒ त्त्विषी॑मते पथी॒नाम्पत॑ये॒ नमो॒ नमो॒ हरि॑केशायोपवी॒तिने॑ पुष्टा॒नाम्पत॑ये॒ नमो॒ नमो॑ बभ्लु॒शाय॑ ॥१७॥ नमो॑ बभ्लु॒शाय॑ । व्या॒धिनेऽन्ना॒नाम्पत॑ये॒ नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑ता॒म्पत॑ये॒ नमो॒ नमो॑ रु॒द्राया॑तता॒यिने॒ क्षेत्रा॑णा॒म्पत॑ये॒ नमो॒ नमः॑ सू॒तायाह॑न्त्यै॒ वना॑ना॒म्पत॑ये॒ नमो॒ नमो॒ रोहि॑-

ताय ॥१८॥ नमो रोहिताय स्थपतये वृक्षाणा-
म्पतये नमो नमो भुवन्तये वारिवस्कृतायौष-
धीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय
कक्षाणाम्पतये नमो नम उच्चैर्घोषायाक्रन्द-
यते पत्तीनाम्पतये नमो नमः कृत्स्नायतया
॥१९॥ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये
नमो नमः सहमानाय निव्याधिन आव्याधि-
नीनाम्पतये नमो नमो निषङ्गिणे ककुभाय
स्तेनानाम्पतये नमो नमो निचेरवे परिचराया-
रण्यानाम्पतये नमो नमो वञ्चते ॥२०॥

नमो वञ्चते परिवञ्चते स्तायूना-
म्पतये नमो नमो निषङ्गिण इषुधिमते तस्क-
राणाम्पतये नमो नमः सृकायिभ्यो जिघांस-
द्भ्यो मुष्णताम्पतये नमो नमोऽसिमद्भ्यो
नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥२१॥

नम ऽउष्णीषिणे ॥ गिरिचराय कुलुञ्चानाम्पतये
नमो नम ऽइषुमद्भ्यो धन्वायिभ्यश्च वो
नमो नम ऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च
वो नमो नम ऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो
नमो विसृजद्भ्यः ॥२२॥ नमो विसृजद्भ्यो विद्-
ध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च
वो नमो नमः शयानेभ्य ऽआसीनेभ्यश्च वो
नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो
नमः सभाभ्यः ॥२३॥ नमः सभाभ्यः सभा-
पतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्य-
श्च वो नमो नम ऽआव्याधिनीभ्यो विवि-
ध्यन्तीभ्यश्च वो नमो नम ऽउगणाभ्यस्तृꣳ-
हतीभ्यश्च वो नमो नमो गणेभ्यः ॥२४॥
नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो
व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो

गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो
व्विरूपेभ्यो व्विश्श्वरूपेभ्यो व्विश्श्वरूपेभ्यश्च
वो नमो नमः सेनाभ्यः ॥२५॥ नमः सेना-
भ्यः । सेनानिभ्यश्च वो नमो नमो रथिभ्यो-
ऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्ग्र-
हीतृभ्यश्च वो नमो नमो महद्भ्योऽअर्भ-
केभ्यश्च वो नमः ॥२६॥ नमस्तक्षभ्यो ।
रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः
कर्म्मारेभ्यश्च वो नमो नमो निषादेभ्यः
पुञ्जिष्टेभ्यश्च वो नमो नमः श्वनिभ्यो
मृगयुभ्यश्च वो नमो नमः श्वभ्यः ॥२७॥
नमः श्वभ्यः । श्वपतिभ्यश्च वो नमो नमो
भवाय च रुद्द्राय च नमः शर्वाय च पशुपतये
च नमो नीलग्ग्रीवाय च शितिकण्ठाय च नमः
कपर्द्दिने ॥२८॥ नमः कपर्द्दिने । च व्युप्तकेशाय

च नमः सहस्राक्षाय च शतधन्न्वने च नमो गिरि-
शयाय च शिपिविष्टाय च नमो मीढुष्टमाय
चेषुमते च नमो ह्रस्वाय ॥२९॥ नमो ह्रस्वाय च
वामनाय च नमो बृहते च वर्षीयसे च नमो
वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नम
ऽआशवे ॥३०॥ नम ऽआशवे चाजिराय च नमः
शीग्घ्र्याय च शीभ्याय च नम ऽऊर्म्याय चावस्व-
न्न्याय च नमो नादेयाय च द्वीप्याय च ॥३१॥
नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्व्वजाय
चापरजाय च नमो मद्ध्यमाय चापगल्भाय च
नमो जघन्न्याय च बुध्न्याय च नमः सोभ्याय
॥३२॥ नमः सोभ्याय च प्रतिसर्य्याय च
नमो याम्म्याय च क्षेम्म्याय च नमः श्लोक्याय
चावसान्न्याय च नम ऽउर्व्वर्य्याय च खल्ल्याय
च नमो वन्न्याय ॥३३॥ नमो वन्न्याय च

कक्ष्या'य च नम÷ श्रवाय च प्रतिश्रवाय' च
नम ऽआशुषे'णाय चाशुरथाय च नमः शूरा'य
चावभेदिने' च नमो' बिल्मिने' ॥३४॥ नमो'
बिल्मिने' । च कवचिने' च नमो' व्वर्म्मिणे' च
व्वरूथिने' च नम÷ श्श्रुताय च श्श्रुतसेनाय च
नमो' दुन्दुब्भ्याय चाहनन्न्याय च नमो' धृष्णवे'
॥३५॥ नमो' धृष्णवे' । च प्रमृशाय च नमो'
निषङ्गिणे' चेषुधिमते' च नमस्तीक्ष्णेषवे चायु-
धिने' च नम÷ स्वायुधाय च सुधन्न्वने च
॥३६॥ नमः स्रुत्या'य । च पत्थ्या'य च नमः
काट्या'य च नीप्प्या'य च नमः कुल्या'य च
सरस्याय च नमो' नादेयाय च वैशन्ताय च
नम'ः कूप्प्या'य ॥३७॥ नमःकूप्प्या'य । चावट्याय
च नमो व्वीद्ध्रया'य चातप्प्याय च नमो मेग्ध्या'य
च व्विद्युत्याय च नमो व्वर्ष्या'य चावर्ष्या'य च
नमो व्वात्या'य ॥३८॥ नमो व्वात्या'य । च

रेष्म्या॑य च॒ नमो॑ व्वास्त॒व्या॑य च वास्तु॒पाय॑ च॒ नमः॒ सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च॒ नमः॑ शङ्गवे॑ ॥३९॥ नमः॑ श॒ङ्गवे॑ । च पशु॒पत॑ये च॒ नम॑ऽउ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑-ग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ व्वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥४०॥ नमः॑ शम्भ॒वाय॑ । च मयोभ॒वाय॑ च॒ नमः॑ शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑ च शि॒वत॑राय च ॥४१॥ नमः॒ पार्य्या॑य चावा॒र्य्या॑य च॒ नमः॑ प्र॒तर॑णाय चो॒त्तर॑णाय च॒ नम॒स्तीर्त्थ्या॑-य च॒ कूल्या॑य च॒ नमः॒ शष्प्या॑य च॒ फेन्या॑य च॒ नमः॑ सिक॒त्या॑य ॥ ४२ ॥ नमः॑ सिक॒त्या॑य । च प्रवा॒ह्या॑य च॒ नमः॑ किꣳशि॒लाय॑ च क्षय॒णा-य॑ च॒ नमः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नम॑ऽइरि॒-ण्या॑य च प्रप॒थ्या॑य च॒ नमो॒ व्व्रज्या॑य ॥४३॥ नमो॒ व्व्रज्या॑य । च गोष्ठ्या॑य च॒ नम॒स्तल्-

ल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्याय च नमः काट्याय च गह्वरेष्ठाय च नमः शुष्क्याय ॥ ४४ ॥ नमः शुष्क्याय । च हरित्याय च नमः पांसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नमऽऊर्व्याय च सूर्व्याय च नमः पर्णाय ॥४५॥ नमः पर्णाय । च पर्णशदाय च नमऽउद्गुरमाणाय चाभिघ्नते च नमऽआखिदते च प्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानांहृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिर्हतेभ्यः । ४६॥ द्रापेऽअन्धसस्पते दरिद्र नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मारोङ्मो च नः किञ्चनाममत् ॥४७॥ इमा रुद्राय । तवसे कपर्द्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथा शमसद्

द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामे ऽअस्मिन्ननातुरम् ॥४८॥ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ॥ शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥४९॥ परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायोः ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥५०॥ मीढुष्टम शिवतम । शिवो नः सुमना भव ॥ परमे वृक्ष ऽआयुधन्निधाय कृत्तिं वसान ऽआचर पिनाकम्बिभ्रदागहि ॥५१॥ विकिरिद्र विलोहित । नमस्ते ऽअस्तु भगवः ॥ यास्ते सहस्रꣳ हेतयोन्न्यमस्मन्निवपन्तु ताः ॥५२॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ॥ तासामीशानो भगवः पराचीना मुखा कृधि ॥५३॥ असंख्याता सहस्राणि ये रुद्रा ऽअधिभूम्याम् । तेषाꣳ सहस्रयोजनेवधन्वानि तन्मसि ॥५४।

अस्मिन्न्महत्त्यर्णवेन्तरिक्षे भवा ऽअधि ॥
तेषाꣳसहस्रयोजनेव धन्न्वानि तन्न्मसि ॥५५॥
नीलग्ग्रीवाः शितिकण्ठा दिवꣳ रुद्द्रा ऽउप-
श्रिताः ॥ तेषाꣳ सहस्रयोजनेव धन्न्वानि
तन्न्मसि ॥५६॥ नीलग्ग्रीवाः शितिकण्ठाः
शर्व्वा ऽअधः क्षमाचराः ॥ तेषाꣳसहस्रयोजनेव
धन्न्वानि तन्न्मसि ॥५७॥ ये व्वृक्षेषु शष्पिञ्जरा
नीलग्ग्रीवा व्विलोहिताः ॥ तेषाꣳ सहस्रयोज-
नेव धन्न्वानि तन्न्मसि ॥५८॥ ये भूतानामधि-
पतयो व्विशिखासः कपर्द्दिनः ॥ तेषाꣳ
सहस्रयोजनेव धन्न्वानि तन्न्मसि ॥५९॥ ये पथा-
म्पाथिरक्षय ऽऐलबृदा ऽआयुर्य्युधः ॥ तेषाꣳ
सहस्रयोजनेव धन्न्वानि तन्न्मसि ॥६०॥ ये ती-
र्त्थानि । प्रचरन्न्ति सृकाहस्ता निषङ्गिणः ॥
तेषाꣳ सहस्रयोजनेव धन्न्वानि तन्न्मसि ॥६१॥

येन्ने॑षु । व्विविद्ध्य॑न्ति पात्त्रे॑षु पिब॑तो जना॑न् ॥ तेषा॑ᳬ सहस्र योजनेव धन्न्वा॑नि तन्न्मसि ॥६२॥ य ऽएताव॑न्तश्च भूया॑ᳬसश्च दिशो॑ रुद्द्रा व्वि॑तास्त्थिरे ॥ तेषा॑ᳬ सहस्रयोजनेव धन्न्वा॑नि तन्न्मसि ॥६३॥ नमो॑स्तु । रुद्द्रेब्भ्यो ये दिवि येषां॑ व्वर्षमिषव॑ः ॥ तेब्भ्यो दश प्प्राचीर्दश॑ दक्षिणा दश॑ प्प्रतीचीर्दशोदी॑चीर्दशोर्द्ध्वाः ॥ तेब्भ्यो नमो॑ ऽअस्तु ते नो॑वन्तु ते नो॑ मृड-यन्तु ते यान्द्विष्ष्मो यश्च॑ नो द्द्वेष्टि तमे॑षा-ञ्जम्भे॑ दद्ध्मः ॥६४॥ नमो॑स्तु रुद्द्रेब्भ्यो येन्त-रिक्षे येषांव्वात ऽइषवः । तेब्भ्यो दश प्प्राचो-र्दश॑ दक्षिणा दश॑ प्प्रतीचीर्दशोदी॑चीर्दशो-र्द्ध्वाः ॥ तेब्भ्यो नमो॑ ऽअस्तु ते नोऽवन्तु ते नो॑ मृडयन्तु ते यन्द्विष्ष्मो यश्च॑ नो द्द्वेष्टि तमे॑षाञ्जम्भे॑ दद्ध्मः ॥६५॥ नमो॑स्तु । रुद्द्रेब्भ्यो

ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६६॥ नमस्ते रुद्र मन्यव उतो त इषवे नमः ॥ बाहुभ्यामुत ते नमः ॥६७॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥६८॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥ शिवाङ्गिरित्र ताङ्कुरु मा हिंसीः पुरुषञ्जगत् ॥६९॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥ यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥७०॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः

परा॑सुव ॥७१॥ असौ यस्ता॒म्रो ऽअ॑रु॒ण ऽउ॒त ब॒भ्रुः सु॑म॒ङ्गलः॑ ॥ ये चै॑नꣳ रु॒द्रा ऽअ॒भितो॑ दि॒क्षु श्रि॒ताः स॑हस्र॒शोवै॑षा॒ꣳ हेड॑ ऽईमहे ॥७२॥ असौ यो॑ऽव॒सर्प॑ति नील॑ग्रीवो॒ विलो॑हितः ॥ उ॒तैनं॑ गो॒पा ऽअ॑दृश्र॒न्नदृ॑श्रन्नुदहा॒र्य्यः॑ स दृ॒ष्टो मृ॑डयाति नः ॥७३॥ नमो॑ऽस्तु॒ नील॑ग्रीवाय सहस्रा॒क्षाय॑ मी॒ढुषे॑ ॥ अथो॒ ये ऽअ॑स्य॒ सत्वा॑नो॒-ऽहं तेभ्यो॑ऽकर॒न्नमः॑ ॥७४॥ प्रमु॑ञ्च॒ धन्व॑न॒स्त्व-मु॒भयो॒रार्त्न्यो॒र्ज्याम् ॥ याश्च॑ ते॒ हस्त॒ ऽइष॑वः॒ परा॒ ता भ॑गवो॒ वप ॥७५॥ विज्ज्य॒न्धनुः॑ कप॒र्द्दिनो॒ विश॑ल्यो॒ बाण॑वाँ२॥ ऽउ॒त ॥ अने॑शन्नस्य॒ या ऽइष॑व ऽआ॒भुर॑स्य निष॒ङ्गधिः॑ ॥७६॥ या ते॑ हे॒तिर्मी॑ढुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनुः॑ ॥ तया॒-स्मान्वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑ भुज ॥७७॥ परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान्वृ॑णक्तु वि॒-

श्श्वतः ॥ अथो य ऽइषु॑धिस्तवारे ऽअस्मन्नि-धे॑हि तम् ॥७८॥ अवतत्य धनुष्ट्वꣳ सहस्राक्ष शते॑षुधे ॥ निशीर्य्य॑ श॒ल्ल्याना॒म्मुखा॑ शि॒वो नः॑ सुमना॑ भव ॥७९॥ नम॑स्त ऽआयुधायाना॑त-ताय धृष्णवे॑ ॥ उभाब्भ्या॑मु॒त ते॒ नमो॑ बाहु-ब्भ्या॒न्तव॒ धन्व॑ने ॥८०॥ मा नो॑ म॒हान्त॑मु॒त मा नो॑ ऽअर्भ॒कम्मा न॒ ऽउक्ष॑न्तमु॒त मा न॑ ऽउक्षि॒तम् ॥ मा नो॑ व्वधीः पि॒तर॒म्मोत मा॒तर॒म्मा नः॑ प्प्रि॒यास्त॒न्न्वो॑ रुद्द्ररीरिषः ॥८१॥ मा न॑स्तो॒के तन॑ये॒ मा न॒ ऽआयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ ऽअश्श्वे॑षु रीरिषः ॥ मा नो॑ व्वी॒रान्न्॑ द्द्र भा॒मिनो॑ व्वधीर्ह॒विष्म॑न्तः सद॒मित्त्वा॑ हवामहे ॥८२॥ ए॒ष ते॑ रुद्द्र भा॒गः स॒ह स्वस्राम्बिक॒या तञ्जु॑षस्व॒ स्वाहै॒ष ते॑ रुद्द्र भा॒ग ऽआ॒खुस्ते॑ प॒शुः ॥८३॥ अव॑ रु॒द्रम॑दीम॒ह्यव॑ दे॒वन्त्र्यम्बकम् ॥

यथा नो व्वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्व्यवसाययात ॥८४॥ नमस्ते रुद्र मन्न्यव ऽउतो त ऽइषवे नमः ॥ बाहुब्भ्यामुत ते नमः ॥८५॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी ॥ तया नस्तन्न्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥८६॥ न तं व्विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप ऽउक्थशासश्चरन्ति ॥८७॥ विश्वकर्म्मा ह्यजनिष्ट देव आदिद्गन्धर्वो ऽअभवद्द्वितीयः तृतीयः । पिता जनितौषधीनामपाङ्गर्भं व्यदधात् पुरुत्रा ॥८८॥ मीढुष्टम शिवतम । शिवो नः सुमना भव ॥ परमे व्वृक्ष ऽआयुधन्निधाय कृत्तिं व्वसान ऽआचर पिनाकम्बिभ्रदागहि ॥८९॥ व्विकिरिद्र व्विलोहित । नमस्ते ऽअस्तु भगवः ॥ यास्ते सहस्रं

हेतयोऽन्यमस्मन्निवपन्तु ताः ॥६०॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥६१॥ असंख्याता सहस्राणि ये रुद्रा ऽअधिभूम्याम् ॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥६२॥ व्वयᳬं सोम व्व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥६३॥ एष ते रुद्र भागः सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्रभाग ऽआखुस्ते पशुः ॥६४॥ अव रुद्र मदीमह्यव देवन्त्र्यम्बकम् । यथा नो व्वस्यसस्करद्यथा नः श्श्रेयसस्करद्यथा नो व्व्यवसाययात् ॥६५॥ भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् ॥ सुखम्मेषाय मेष्ष्यै ॥६६॥ त्र्यम्बकं य्यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् ॥ त्र्यम्बकं य्यजामहे

सुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥९७॥ एतत्ते । रुद्रावसन्तेन परो मूजवतोतीहि ॥ अवततधन्न्वा पिनाकावसः कृत्तिवासा ऽअहिꣳसन्नः शिवोतीहि ॥९८॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु त्र्यायुषम् ॥९९॥ शिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्याय प्प्रजननाय रायस्प्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ॥१००॥

इति शतरुद्रियम् ।

## ॥ अथ शान्त्यध्यायः ॥

ॐ । ऋचं व्वाचम्प्रपद्ये मनो यजुः प्प्रपद्ये साम प्प्राणम्प्रपद्ये चक्षुः श्श्रोत्रम्प्रपद्ये ॥ व्वागोजः सहौजो मयि प्प्राणापानौ ॥१॥ यन्मे

छिद्रञ्चक्षुषो हृदयस्य मनसो व्वातितृणण्ण्बृहस्पतिर्म्मे तद्दधातु ॥ शन्नो भवतु भुवनस्य यस्पतिः ॥२॥ भूर्भुवः स्वः । तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥३॥ कया नश्चित्र ऽआभुवदूती सदावृधः सखा ॥ कया शचिष्ठया व्वृता ॥४॥ कस्त्वा । सत्यो मदानाम्मंहिष्ठो मत्सदन्धसः ॥ दृढा चिदारुजे व्वसु ॥५। अभी षु णः। सखीनामविता जरितॄणाम् । शतम्भवास्यूतिभिः ॥६॥ कया त्वन्न ऽऊत्याभि प्रमन्दसे व्वृषन् । कया स्तोतृभ्य ऽआभर ॥७॥ इन्द्रो विश्वस्य राजति ॥ शन्नो ऽअस्तु द्विपदे शञ्चतुष्पदे ॥८॥ शन्नो मित्रः शं व्वरुणः शन्नो भवत्वर्य्यमा ॥ शन्न ऽइन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥९॥ शन्नो व्वातः ॥ पवताꣳ शन्न-

स्तपतु सूर्य्यः ॥ शन्नः कनिक्रदद्देवः पर्ज्जन्यो ऽअभिवर्षतु ॥१०॥ अहानि शम्भवन्तु नः शꣳ रात्रीः प्रतिधीयताम् । शन्न ऽइन्द्राग्नी भवतामवोभिः शन्न ऽइन्द्रावरुणा रातहव्या ॥ शन्न ऽइन्द्रापूषणा व्वाजसातौ शमिन्द्रासोमा सुविताय शं य्योः ॥११॥ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शं य्योरभिस्रवन्तु नः ॥१२॥ स्योना पृथिवि । नो भवान्नृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥१३॥ आपो हि । ष्ठा मयोभुवस्ता न ऽऊर्जे दधातन ॥ महेरणाय चक्षसे ॥१४॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥१५॥ तस्मा ऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥१६॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः

पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वंः शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१७॥ दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ॥ मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥१८॥ दृते दृंह मा । ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम् ॥१९॥ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे ॥ अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यंः शिवो भव ॥२०॥ नमस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नवे ॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥२१॥ यतो यतः समीहसे ततो नो ऽअभयङ्कुरु ॥ शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः

॥२२॥ सुमित्रियान ऽआप ऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मः ॥२३॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतञ्जीवेम शरदः शतं शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥२४॥

इति रुद्रे शान्त्यध्यायः ॥६॥

## अथ रुद्रे स्वस्तिप्रार्थनामन्त्राध्यायः ॥

ॐ स्वस्ति न ऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्द्दधातु ॥१॥ ॐ पयः पृथिव्याम्पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥२॥ ॐ व्विष्णो रराटमसि व्विष्णोः

श्नप्त्रे स्थो व्विष्णोः स्यूरसि व्विष्णो ध्रुवोऽसि ॥ वैष्णवमसि व्विष्णवे त्वा ॥३॥ ॐ अग्निर्देवता व्वातो देवता सूर्य्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्द्रा देवतादित्या देवता मरुतो देवता व्विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता व्वरुणो देवता ॥४॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥५॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥६॥ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते ऽअस्तु रुद्ररूपेभ्यः ॥७॥ तत्पुरुषाय विद्महे महादेवाय

धीमहि ॥ तन्नो रुद्रः प्रचोदयात ॥८॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे ऽअस्तु सदाशिवोम् ॥९॥ ॐ शिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥१०॥ ॐ व्विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्न ऽआसुव ॥११॥ ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१२॥ ॐ सर्वेषां वा एष व्वेदानाꣳ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥१३॥

॥ इति स्वस्तिप्रार्थनामन्त्राध्यायः ॥

ॐ शान्तिः शान्तिः सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु ॥ अनेन कृतेन शतरुद्रियाभिषेककर्मणा श्रीभवानीशङ्करमहारुद्रः प्रीयतान्न मम ॥ ॐ सदाशिवार्पणमस्तु ॥इति॥

## ॥ श्री सूक्तम् ॥

ॐ हिरंण्यवर्णां हरिंणीं सुवर्णरजतस्रंजाम् ॥ चंद्रां हिरण्मंयीं लक्ष्मीं जातंवेदो म आवंह ॥१॥ तां म आवंह जातवेदो लक्ष्मीमनंपगामिनीम् ॥ यस्यां हिरंण्यं विन्देयं गामश्वं पुरुंषानहम् ॥२॥ अश्वपूर्वां रंथमध्यां हस्तिनांदप्रबोधिंनीम् । श्रियं देवीमुपंह्वये श्रीर्मां देवीजुंषताम् ॥३॥ कांसोस्मितां हिरंण्यप्राकारांमाद्रां ज्वलंन्तीं तृप्तां तर्पयंतीम् । पद्मे स्थितां पद्मवंर्णां तामिहोपंह्वये श्रियंम् ॥४॥ चंद्रां प्रंभासां यशसा ज्वलंतीं श्रियं लोके देवजुंष्टामुदाराम् ।

तांपद्मनेमींशरणमहं प्रपद्येअलक्ष्मी मे नश्यतांत्वां
वृणोमि ॥५॥ आदित्यवर्णे तपसोधिजातो वन-
स्पतिस्तव वृक्षोथबिल्वः ॥ तस्यफलानितपसानु-
दंतुमायांतरायाश्चबाह्या अलक्ष्मीः ॥६॥ उपैतु-
मांदेवसखः कीर्तिश्चमणिंनासह ॥ प्रादुर्भूतो
सुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥७॥ क्षुत्पिपासा-
मलाज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमस-
मृद्धिंचसर्वां निर्णुदमेगृहात् ॥८॥ गंधद्वारां
दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं
सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ मनसः
काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूप-
मन्नस्यमयि श्रीः श्रयतां यशः ॥१०॥ कर्दमेन
प्रजा भूता मयि सम्भव कर्दम । श्रियं वासयमे
कुले मातरं पद्ममालिनीम् ॥११॥ आपः सृजन्तु
स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं

मातरं श्रियं वासयं मे कुले ॥१२॥ आर्द्रां पुष्करिणीं पुष्टिं (सुवर्णां हेम) मालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥ आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम्। चद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥ तांम ऽआवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्यो ऽश्वान्विन्देयं पुरुषानहम् ॥१५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥१६॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसंभवे तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥१७॥ अश्वदायी गोदायी धनदायी महाधने। धनं मेजुषतां देवि सर्वकामांश्चदेहि मे ॥१८॥ पद्मानने पद्म विपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि विश्वप्रिये विश्वमनोऽनुकूले त्वत्पादपद्मरमयिसन्निधत्स्व ॥१९॥

पुत्रपौत्र धनं धान्यं हस्त्यश्वादि गवे रथं। प्रजानां भवसीमाता आयुष्मन्तं करोतु मे। धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः। धनमिन्द्रो बृहस्पति वरुणं धनमस्तुते ॥२०॥ वैनतेय सोमं पिबसोमं पिबतुवृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥२१॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभामतिः। भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२२॥ सरसिजनीलये सरोज हस्ते धवलतरांशूक गन्धमाल्य शोभे। भगवति हरि-वल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥२३॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियां। लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युत वल्लभां ॥२४॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि। तन्नो लक्ष्मीः प्रचोदयात् ॥२५॥ श्रीवर्चस्व मायुष्य मारोग्य माविधाच्छोभमानं महीयते। धान्यं धनं

पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२६॥ ( पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि। विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयिसन्निधत्स्व ॥२७॥ श्रिये जातश्रिय आनिर्यायश्रियं वयोजनितृभ्योदधातु। श्रियं-वसाना अमृतत्त्वमायन् भजन्ति सद्यः सवीता विदध्यून् ॥२८॥ श्रिय एवैनं तच्छ्रिया मादधाति सन्ततरुमृचा वषट्कृत्यं सन्धत्तं संधीयते प्रजया पशुभिः। य एवं वेद। ॐ महादेव्यैच विद्महे विष्णुपत्न्यै च धीमहि तन्नो लक्ष्मीः प्रचोदयात् ॥)

सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्

इतिश्री सूक्तम्।

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

# श्रीशिव-अष्टोत्तरशतनामावली

१ ॐ शिवाय नमः
२ ॐ महेश्वराय नमः
३ ॐ शंभवे नमः
४ ॐ पिनाकिने नमः
५ ॐ शशिशेखराय नमः
६ ॐ वामदेवाय नमः
७ ॐ विरूपाक्षाय नमः
८ ॐ कपर्दिने नमः
९ ॐ नीललोहिताय नमः
१० ॐ शंकराय नमः
११ ॐ शूलपाणये नमः
१२ ॐ खट्वाङ्गिने नमः
१३ ॐ विष्णुवल्लभाय नमः
१४ ॐ शिपिविष्टाय नमः
१५ ॐ अंबिकानाथाय नमः
१६ ॐ श्रीकंठाय नमः
१७ ॐ भक्तवत्सलाय नमः
१८ ॐ भवाय नमः
१९ ॐ शर्वाय नमः
२० ॐ त्रिलोकेशाय नमः
२१ ॐ शितिकंठाय नमः
२२ ॐ शिवाप्रियाय नमः
२३ ॐ उग्राय नमः
२४ ॐ कपालिने नमः
२५ ॐ कामारये नमः
२६ ॐ अंधकासुरसूदनाय नमः
२७ ॐ गंगाधराय नमः
२८ ॐ ललाटाक्षाय नमः
२९ ॐ कालकालाय नमः
३० ॐ कृपानिधये नमः
३१ ॐ भीमाय नमः
३२ ॐ परशुहस्ताय नमः
३३ ॐ मृगपाणये नमः
३४ ॐ जटाधराय नमः
३५ ॐ कैलासवासिने नमः
३६ ॐ कवचिने नमः
३७ ॐ कठोराय नमः
३८ ॐ त्रिपुरांतकाय नमः
३९ ॐ वृषांकाय नमः
४० ॐ वृषभारूढाय नमः
४१ ॐ भस्मोद्धूलित विग्रहाय नमः
४२ ॐ सामप्रियाय नमः
४३ ॐ स्वरमयाय नमः
४४ ॐ त्रयीमूर्तये नमः
४५ ॐ अनीश्वराय नमः
४६ ॐ सर्वज्ञाय नमः
४७ ॐ परमात्मने नमः
४८ ॐ सोमसूर्याग्नि लोचनाय नमः

४९ ॐ हविषे नमः
५० ॐ यज्ञमयाय नमः
५१ ॐ सोमाय नमः
५२ ॐ पंचवक्त्राय नमः
५३ ॐ सदाशिवाय नमः
५४ ॐ विश्वेश्वराय नमः
५५ ॐ वीरभद्राय नमः
५६ ॐ गणनाथाय नमः
५७ ॐ प्रजापतये नमः
५८ ॐ हिरण्यरेतसे नमः
५९ ॐ दुर्धर्षाय नमः
६० ॐ गिरीशाय नमः
६१ ॐ गिरिशाय नमः
६२ ॐ अनघाय नमः
६३ ॐ भुजंगभूषणाय नमः
६४ ॐ भर्गाय नमः
६५ ॐ गिरिधन्विने नमः
६६ ॐ गिरिप्रियाय नमः
६७ ॐ कृत्तिवाससे नमः
६८ ॐ पुरारातये नमः
७९ ॐ भगवते नमः
७० ॐ प्रमथाधिपाय नमः
७१ ॐ मृत्युंजयाय नमः
७२ ॐ सूक्ष्मतनवे नमः
७३ ॐ जगद्व्यापिने नमः
७४ ॐ जगद् गुरवे नमः
७५ ॐ व्योमकेशाय नमः
७६ ॐ महासेन जनकाय नमः
७७ ॐ चारुविक्रमाय नमः
७८ ॐ रुद्राय नमः
७९ ॐ भूतपतये नमः
८० ॐ स्थाणवे नमः
८१ ॐ अहिर्बुध्न्याय नमः
८२ ॐ दिगंबराय नमः
८३ ॐ अष्टमूर्तये नमः
८४ ॐ अनेकात्मने नमः
८५ ॐ सात्त्विकायनमः
८६ ॐ शुद्धविग्रहाय नमः
८७ ॐ शाश्वताय नमः
८८ ॐ खंडपरशवे नमः
८९ ॐ अजाय नमः
९० ॐ पाशविमोचनाय नमः
९१ ॐ मृडाय नमः
९२ ॐ पशुपतये ममः
९३ ॐ देवाय नमः
९४ ॐ महादेवाय नमः
९५ ॐ अव्ययाय नमः
९६ ॐ हरये नमः
९७ ॐ पूषदंतभिदे नमः
९८ ॐ अव्यग्राय नमः
९९ ॐ दक्षाध्वरहराय नमः
१०० ॐ हराय नमः

१०१ ॐ भगनेत्रभिदे नमः
१०२ ॐ अव्यक्तायन नमः
१०३ ॐ सहस्राक्षाय नमः
१०४ ॐ सहस्रपदे नमः
१०५ ॐ अपवर्गप्रदाय नमः
१०६ ॐ अनंताय नमः
१०७ ॐ तारकाय नमः
१०८ ॐ परमेश्वराय नमः

# अथ श्री ललिताष्टोत्तरशतनामावली

१ ॐ रजताचलशृंङ्गाग्रमध्यस्थायै नमः
२ ॐ हिमाचलमहावंशपावनायै नमः
३ ॐ शंकरार्धांगसौन्दर्यशरीरायै नमः
४ ॐ लसन्मरकतस्वच्छविग्रहायै नमः
५ ॐ महातिशयसौन्दर्यलावण्यायै ,,
६ ॐ शशांकशेखरप्राणवल्लभायै ,,
७ ॐ सदापंचदशात्मैक्यस्वरूपायै ,,
८ ॐ वज्रमाणिक्यकटककिरीटायै ,,
९ ॐ कस्तूरीतिलकोल्लासिनिटलायै ,,
१० ॐ भस्मरेखांकितलसन्मस्तकायै ,,
११ ॐ विकचाम्भोरुहदलोचनायै ,,
१२ ॐ शरच्चाम्पेयपुष्पाभनासिकायै ,,
१३ ॐ लसत्कांचनताटंकयुगयै ,,
१४ ॐ मणिदर्पणसंकाशकपोलायै ,,
१५ ॐ ताम्बूलपूरितस्मेरवदनायै ,,
१६ ॐ सुपक्वदाडिमीबीजरदनायै ,,
१७ ॐ कम्बुपूगसमच्छायकंधरायै ,,
१८ ॐ स्थूलमुक्ताफलोदारसुहारायै ,,
१९ ॐ गिरीशबद्धमांगल्यमंगल्यै ,,
२० ॐ पद्मपाशांकुशलसत्कराब्जायै ,,
२१ ॐ पद्मकैरवमन्दारसुमालिन्यै नमः
२२ ॐ सुवर्णकुम्भयुग्माभसुकुचायै ,,
२३ ॐ रमणीयचतुर्बाहुसंयुक्तायै ,,
२४ ॐ कनकांगदकेयूरभूषितायै ,,
२५ ॐ बृहत्सौवर्णसौन्दर्यवसनायै ,,
२६ ॐ बृहन्नितम्बविलसज्जघनायै ,,
२७ ॐ सौभाग्यजातशृंगारमध्यमायै ,,
२८ ॐ दिव्यभूषणसन्दोहरञ्जितायै ,,
२९ ॐ पारिजातगुणाधिक्यपदाब्जायै ,,
३० ॐ सुपद्मरागसङ्काशचरणायै ,,
३१ ॐ कामकोटिमहापद्मपीठस्थायै ,,
३२ ॐ श्रीकण्ठनेत्रकुमुदचन्द्रिकायै ,,
३३ ॐ सचामररमावाणीविजितायै ,,
३४ ॐ भक्तरक्षणदाक्षिण्यकटाक्षायै ,,
३५ ॐ भूतेशालिङ्गनोद्भूतपुलकाङ्ग्यै
३६ ॐ अनङ्गजनकापाङ्गवीक्षणायै ,,
३७ ॐ ब्रह्मोपेन्द्रशिरोरत्नरंजितायै ,,
३८ ॐ शचीमुख्यामरवधूसेवितायै ,,

३९ ॐ लीलाकल्पितब्रह्माण्डमण्डलायै ,,
४० ॐ अमृतादिमहाशक्तिसंवृतायै ,,
४१ ॐ एकातपत्रसाम्राज्यदायिकायै ,,
४२ ॐ सनकादिसमाराध्यपादुकायै नमः
४३ ॐ देवर्षिभिस्स्तूयमानवैभवायै नमः
४४ ॐ कलशोद्भवदुर्वासः पूजितायै नमः
४५ ॐ मत्तेभवक्त्रषड्वक्त्रवत्सलायै नमः
४६ ॐ चक्रराजमहायन्त्रमध्यवर्तिन्यै नमः
४७ ॐ चिदग्निकुण्डसम्भूतसुदेहायै नमः
४८ ॐ शशाङ्कखण्डसम्भूतसुदेहायै नमः
४९ ॐ मत्तहंसवधूमन्दगमनायै नमः
५० ॐ वन्दारुजनसन्दोहवन्दितायै नमः
५१ ॐ अन्तर्मुखजनानन्दफलदायै नमः
५२ ॐ पतिव्रताङ्गनाभीष्टफलदायै नमः
५३ ॐ अव्याजकरुणापूरपूरितायै नमः
५४ ॐ नितान्तसच्चिदानन्दसंयुक्तायै नमः
५५ ॐ सहस्रसूर्यसंयुक्तप्रकाशायै नमः
५६ ॐ रत्नचिन्तामणिगृहमध्यस्थायै ,,
५७ ॐ हानिवृद्धिगुणाधिक्यरहितायै ,,
५८ ॐ महापद्माटवीमध्यनिवासायै ,,
५९ ॐ जाग्रत्स्वप्नसुषुप्तीनांसाक्षिभूत्यै ,,
६० ॐ महापापौघपापानांविनाशिन्यै नमः
६१ ॐ दुष्टाभीतिमहाभीतिभंजनायै नमः
६२ ॐ समस्तदेवदनुजप्रेरकायै नमः
६३ ॐ समस्तहृदयाम्भोजनिलयायै नमः
६४ ॐ ४अनाहतमहापद्ममन्दिरायै नमः

६५ ॐ सहस्रारसरोजातवासितायै नमः
६६ ॐ पुनरावृत्तिरहितपुरस्थायै नमः
६७ ॐ वाणीगायत्रीसन्नुतायै नमः
६८ ॐ रमाभूमिसुताराध्यपदाब्जायै ,,
६९ ॐ लोपामुद्रार्चितश्रीमच्चरणायै नम
७० ॐ सहस्ररतिसौन्दर्यशरीरायै नमः
७१ ॐ भावनामात्रसन्तुष्टहृदयायै नमः
७२ ॐ सत्यसम्पूर्णविज्ञानसिद्धिदायै नमः
७३ ॐ श्रीलोचनकृतोल्लासफलदायै नमः
७४ ॐ श्रीसुधाब्धिमणिद्वीपमध्यगायै नमः
७५ ॐ दक्षाध्वरविनिर्भेदसाधनायै नमः
७६ ॐ श्रीनाथसोदरीभूतशोभितायै नमः
७७ ॐ चन्द्रशेखरभक्तार्तिभंजनायै नमः
७८ ॐ सर्वोपाधिविनिर्मुक्तचैतन्यायै नमः
७९ ॐ नामपारायणाभीष्टफलदायै नमः
८० ॐ सृष्टिस्थितितिरोधानसङ्कल्पायै ,,
८१ ॐ श्रीषोडशाक्षरीमन्त्रमध्यगायै ,,
८२ ॐ अनाद्यन्तस्वयम्भूतदिव्यमूर्त्यै ,,
८३ ॐ भक्तहंसपरीमुख्यवियोगायै नमः
८४ ॐ मातृमण्डलसंयुक्तललितायै नमः
८५ ॐ भण्डदैत्यमहासत्त्वनाशनायै नमः
८६ ॐ क्रूरभण्डशिरश्छेदनिपुणायै नमः
८७ ॐ धात्रच्युतसुराधीशसुखदायै नमः
८८ ॐ चण्डमुण्डनिशुम्भादिखण्डनायै ,,
८९ ॐ रक्ताक्तरक्तजिह्वादिशिक्षणायै ,,
९० ॐ महिषासुरदोर्वीर्यनिग्रहायै ,,

९१ ॐ अभ्रकेशमहोत्साहकारणायै ,,
९२ ॐ महेशयुक्तनटनतत्परायै नमः
९३ ॐनिजभर्तृमुखाम्भोजचिन्तनायै,,
९४ ॐ वृषभध्वजविज्ञानभावनायै ,,
९५ ॐ जन्ममृत्युजरारोगभंजनायै ,,
९६ ॐ विधेयमुक्तविज्ञानसिद्धिदायै ,,
९७ ॐ कामक्रोजादिषड्वर्गनाशनायै,,
९८ ॐ राजराजार्चितपदसरोजायै ,,
९९ ॐ सर्ववेदान्तसंसिद्धसुतत्त्वायै ,,
१०० ॐश्रीवीरभक्तविज्ञाननिधनायै ,,
१०१ ॐ अशेषदुष्टदनुजसूदनायै नमः
१०२ ,,साक्षाच्छ्रीदक्षिणामूर्तिमनोज्ञायै ,,
१०३ ॐ हयमेधाग्रसम्पूज्यमहिमायै ,,
१०४ ॐदक्षप्रजापतिसुतवेषाढ्यायै ,,
१०५ॐकुसुमबाणेक्षुकोदण्डमण्डितायै
१०६ ॐनित्ययौवनमाङ्गल्यमङ्गलायै,,
१०७ ॐ महादेवसमायुक्तशरीरायै ,,
१०८ ॐ महादेवरतौत्सुक्यमहादेव्यै ,,

* * *

# द्वादशज्योतिर्लिङ्गस्मरणम्

॥ श्रीगणेशाय नमः ॥

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोंकारममलेश्वरम् ॥ १ ॥

परल्यां वैद्यनाथं च डाकिन्यां भीमशंकरम् ।
सेतुबंधे तु रामेशं नागेशं दारुकावने ॥ २ ॥

वाराणस्यां तु विश्वेशं त्र्यंबकं गौतमीतटे ।
हिमालयं तु केदारं घुश्मेशं (घुसृणेशं) च शिवालये ॥ ३ ॥

एतानि ज्योतिर्लिङ्गानि सायंप्रातः पठेन्नरः ।
सप्तजन्म कृतं पापं स्मरणेन विनश्यति ॥ ४ ॥

इति श्री द्वादशज्योतिर्लिङ्गस्मरणं संपूर्णम् ।

# आरती

"श्री चिदम्बर नटम्"

सुदञ्चित मुदञ्चित निकुञ्चित पदार्पित जलञ्झलित मंजुकटकं,
पतञ्जलि दृगञ्जन मचञ्चल पदंजनन भंजनकरं गलरवम्।
कदम्ब रुचिमम्बर वसंपरममम्बुद कदम्बकविडम्बनकरं,
चिदम्बुधि मणिंबुध हृदम्बुजरविं वरचिदम्बरनटं हृदिभजे ॥१॥
हरंत्रिपुरभञ्जन मनन्तकृतकङ्कण मखण्डदयमन्त रहितं,
विरञ्चिसुरसंहति पुरन्दर विचिन्तित, पदंतरुण चन्द्रमकुटम्।
परंपरमखण्डित यमंभसितमण्डित तनुंमदनभञ्जनकरं,
चिरन्तनमिमं प्रणतसञ्चितनिधिं वरचिदम्बर० ॥२॥
अनन्त नवरत्नविलसत्कनक किङ्किणि झलंझल झलंझल रवं,
मुकुन्दविधि हस्तगति मद्दललयध्वनिधिमिद्धिमित नर्तनपदम्।
शकुन्तरथ बर्हिरथ दन्तिमुख नन्दिमुख भृङ्गिनटसङ्घ निकटं,
सनन्दसनक प्रमुख वन्दितपदं वरचिदम्बर० ॥३॥
अनन्त मखिलं जगदभङ्गगुणतुङ्ग ममतंसितविधुं सुरसरि-
त्तरङ्ग निकुरुम्बधृत लम्बनजटं शमनडम्भहरणं भवहरम्।
शिवंदशदिगन्तर निरन्तर विजृम्भित करंकरल सन्मृगशिशुं,
भवंशशिधनञ्जय पतङ्ग नयनं वरचिदम्बर० ॥४॥
परं पुरहरं सुरवरं पशुपतिं जनित दन्तिमुख षण्मुखविभुं,
मृडंकनक पिङ्गल जटिं सनक पङ्कज रविं शमित संयमिशुचिम्।
शिवं कलभचर्मवसनं जलधि जन्मगार लंकवलयन्तममलं,
दृढंप्रणवकन्दमभयं करपदं वरनचिदम्बर० ॥५॥
अखण्डविधुमण्डलमुखं डमरुमण्डित करं कनक मण्डपगृहं,
स्वगण्डतल कुण्डलित कुण्डलिप मण्डलित मण्डल पिचण्ड मतुलम्।
मृकण्डसुत चण्डतरदण्ड धर लुण्ठन परं हृदय मण्ड परशुं,
शिखण्ड शशि खण्डमणि मण्डन परं वर चिदम्बर० ॥६॥

# देव्यपराधक्षमापनस्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो,
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जाने विलपनं,
परं जाने मातस्त्वदनुसरणं क्लेशहरम् ॥ १ ॥
विधेरज्ञानेन द्रविणविरहेणालसतया,
विधेयाशक्यत्वात् तव चरणयोर्या च्युतिरभूत् ।
तदेतत्क्षन्तव्यं जननि सकलोद्धारिणि शिवे,
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ २ ॥
पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः,
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो० ।३।
जगन् मातर्मातस्तव चरणसेवा नरचिता,
न वा दत्तं देवी द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरूपमं यत्प्रकुरुषे कुपुत्रो० ॥४॥
परित्यक्त्वा देवान् विविधविधसेवा कुलतया,
मया पञ्चाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता,
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥५॥
श्वपाको जल्पाको भवति मधुपाकोपमगिरा,
निरातङ्को रङ्को विहरति चिरं कोटिकनकैः ।

तवापर्णे कर्णे विशति मनुवर्णे फलमिदं,
जनः को जानीते जननि जपनीयं जपविधौ ॥ ६ ॥
चिता भस्मालेपो गरलमशनं दिक्पटधरो,
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं,
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७ ॥
न मोक्षस्याकांक्षा भवविभववाञ्छापि च न मे,
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै,
मृडानी रुद्राणी शिव-शिव भवानीति जपतः ॥ ८ ॥
नराधितासि विधिना विविधोपचारैः,
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किंचन मय्यनाथे,
धत्से कृपामुचितमम्ब परं तवैव ॥ ९ ॥
आपत्सु मग्नः स्मरणं त्वदीयं, करोमि दुर्गे करुणार्णवेशिवे ।
नैतच्छठत्वं मम भावयेथाः, क्षुधातृषार्ता जननीं स्मरन्ति ॥१०॥
जगदम्ब विचित्रमत्र किं, परिपूर्णा करुणास्ति चेन्मयि !
अपराधपरंपरावृतं, नहि माता समुपेक्षते सुतम् ॥११॥
मत्समः पातकी नास्ति पापघ्नी त्वत्समा नहि ।
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥१२॥
॥ इति श्रीशंकराचार्य विरचितं देव्यपराधक्षमापन स्तोत्रं सम्पूर्णम् ॥